TO Shri 1008 Jagatguru Vishweshwar Shivcharya Mahaswamy, Vishwaradhya Samathaham Jangambari Math, Banaras

A LOVING BLISSFUL PRESENT

FROM

HIS MAJESTY THE KING OF NEPAL'S

PRINCIPAL PERSONAL SECRETARIAT

ROYAL PALACE, NEPAL.

ॐ

# श्रीभगवच्चन्द्रिका

बडाकाजी पुष्पराजः

२०२३

प्रकाशकः–

श्री ५ महाराजाधिराजानां प्रमुख स्वकीय सचिव,
महाउज्ज्वल कीर्तिमय नेपाल श्रीपद, ज्योतिर्मय
सुविख्यात त्रिशक्तिपट्ट, सुप्रसिद्ध प्रबल
गोरखा दक्षिणबाहु, बडाकाजी पुष्पराजः
जी. सी. भी. ओ.
८।३७० वटुटोल,
काठमाडौं नेपाल ।



| | | | |
|---|---|---|---|
| प्रथम संस्करणम् | १००० | सम्वत् | २०१५ |
| द्वितीय संस्करणम् नेपालीटीकासमेतम् | १००० | सम्वत् | २०१६ |
| तृतीय संस्करणम् | १००० | सम्वत् | २०१८ |
| चतुर्थ संस्करणम् | १००० | सम्वत् | २०२१ |
| पञ्चम संस्करणम् नेपालीटीकायुक्तम् | १००० | सम्वत् | २०२१ |
| षष्ठ संस्करणम् आङ्गल भाषा टीका युक्तम् | १००० | सम्वत् | २०२३ |



मुद्रकः–
श्री ५ को सरकारको छापाखाना

Om

# Shree Bhagavachchandrika

*Verses and passages*

from

Most of the scriptures, the
Puranas, Tantras, Yoga, Vedantasootras,
Upanishads etc

*Selected and Compiled*
*by*
**Shree Bada Kaji Pushpa Raj**

and

*Translated by*
**Prof. Gopal Nidhi Tiwari**
Vedantacharya, M. A. (Eng.)
Nepal Government Sanskrit College
& Tribhuvana Visvavidyalaya

B. S. 2023
A. D. 1967



श्री ५ महाराजाधिराज महेन्द्र वीर विक्रम शाह देव नेपाल

नेपालाधिपतिर्देवः श्री महेन्द्रो विराजते ।
परसंवित्प्रभापुष्पमिदं तस्मै समर्पये ।।

श्रीमतां सेवकः पुष्पराजः
संवत् २०२३ साल

**Dedication in Sanskrit under the Photo is in English as under:**

**SHREE PANCHA MAHARAJADHIRAJA MAHENDRA**
**VEERA VIKRAMA SHAHA DEVA**
**N E P A L**

**NEPALADHIPATIR-DEVAH SHREE MAHENDRO VIRAJATE**
**PARA-SAMVIT-PRABHA-PUSHPAM-IDAM TASMAI SAMARPAYE**

The sovereign of Nepal glorious Mahendra reigns
To him this pure intellectual lustrous flower I offer

His Majesty's Servant
**Pushparajah**
Samvat Era 2023
(A.D. 1967)

महामोहतमःस्तोमकलिताविलचेतसाम् ।
भगवच्चन्द्रिकालोकः कैवल्यपथदर्शकः ॥१॥
इत्याकलय्य विबुधैः संमतिः प्रेषितास्तुयैः ।
नामानीह प्रदर्श्यन्ते तेषां ज्ञानैकचक्षुषाम् ॥२॥

॥ श्री विश्वनाथो विजयतेतराम् ॥

श्री मत्परमहंस परिव्राजकाचार्य श्रोत्रिय ब्रह्मनिष्ठ

# श्री १०८ स्वामी त्रिवेणी पुरी जी महाराज न्यायवेदान्ताचार्य

ॐ

अध्यक्ष व संस्थापकः सन्यास आश्रम, सन्यासीरोड
कनखल, (हरिद्वार) उ० प०

दिनांक.....३०।४।१९६२

श्रीमत्सु विविधशास्त्रगुणगणालंकृतचित्तेषु काजि श्रीपुष्पराजमहोदयेषु, पूतोनारायणाय इति शुभाशीर्वादः स्वीकृतः स्यात् ।

प्रिय पुष्पराज ! श्रीमतां तत्रभवतां संगृहीतां श्रीभगवच्चन्द्रिकां समालोच्य चेतोमदीयमानन्दसन्दोहमविन्दत,

मन्ये एतया बहवो मुमुक्षवोऽनादिकालप्रवृत्ताऽज्ञानध्वान्तमुपशमयिष्यन्ति, यथाच श्रीमद्भिः श्रद्धया परमप्रीत्याच पुस्तकानि मे नामसंकेतमुद्दिश्य प्रहितानि तथैव मुमुक्षुभ्यो महात्मभ्यः समर्पितानि—

इति न चिन्त्यम् । अथ च कदाचित् पुण्यभूमिहरिद्वारमभिलक्ष्य यदि भवतामभिगमनशुभावसरः स्यात् तदा आश्रमो यं नविस्मर्तव्यः इत्यलंविज्ञेषु श्रीमतां तत्र भवतां शुभचिन्तकः

त्रिवेणीपुरी
संन्यास आश्रम संन्यासी रोड
कनखल हरिद्वार

# श्री द्वारका शारदा पीठम्

## श्रीद्वारकाधीशचन्द्रमौलिश्वरो विजयेतेतराम् ।।

श्रीमत्परमहंसपरिव्राजकाचार्यवर्य पदवाक्यप्रमाणपारावरवारीण यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यष्टाङ्गयोगानुष्ठाननिष्ठ तपश्चर्याचरणचक्रवर्ति अनाद्यविच्छिन्नगुरुपरम्पराप्राप्त षण्मतस्थापनाचार्य सांख्यत्रयप्रतिपादक वैदिकमार्गप्रवर्त्तक सर्वतन्त्रस्वतन्त्र निखिलनिगमागमसारहृदय श्रीमत्सुधन्वसाम्राज्यप्रतिष्ठापनाचार्य व्याख्यानसिंहासनाधीश्वर श्रीमद्राजाधिराज गुरुभूमण्डलाचार्य चातुर्वर्ण्यशिक्षक गोमतीतीरवासि श्रीपश्चिमाम्नाय श्रीद्वारकाशारदापीठाधीश्वर श्रीमद्जगद्गुरु श्री शङ्कराचार्य श्री ११०८ श्री

## श्रीअभिनवसच्चिदानन्दतीर्थस्वामिभिः

अस्मदत्यन्तप्रियशिष्य श्री ५ महाराजाधिराजानां सहयोगि स्वकीय सचिव श्रीकाजीपुष्पराजानां ———————————— विषये कालत्रयविरचितनारायणस्मरणसंसूचिताशिषस्समुल्लसन्तुतराम् । श्रीजगद्गुरु श्रीशंकराचार्य प्रतिष्ठापित द्वारकाशारदापीठविषयिणी भक्तिरनवधिकश्रेयोनिदानमिति सार्वजनीनमेतत् ।

ता. ९. ५. ६२ दिनेऽयम्पत्रमत्र भगवच्चन्द्रिकाग्रन्थेन साकमायातम् ।

श्रुतिस्मृत्याद्यनेकग्रन्थपरिशीलनेन रुचिराणां विषयाणां समाकलनमाधाय तत्त्वजिज्ञासूनां मननशीलानां मनोविनोदाय ग्रन्थोयमारचित इति श्लाघनीयतामर्हति ।

सकलसद्गुणमलंकृतश्रीनेपालाधीश्वर श्री ५ महाराजाधिराजानां आश्रयेण प्रकाशितो ग्रन्थवरोयं सर्वथा सर्वसामादरणीयो भूयादिति समाकांक्षामः ।

शुभा हार्दिका आशिषस्समुल्लसन्तुतरां यत् भगवतो श्रीद्वारकाधीश श्रीचन्द्रमौलीश्वरयोरनुकम्पाकटाक्षेण श्री ५ महाराजाधिराजस्सामात्यः सपरिवारो राजपरिवारेण साकं आयुरारोग्यैश्वर्यशाली विजयतामिति शम् ।

दुर्वासपुरम् मैसूर. क्रमांक. ९९४.

Secretary to H.H. Shree
Jagadguru Shankaracharya Maharaj
Shree Sharda Peeth. DWARKA

# श्री जगद्गुरु महासंस्थानं, शारदा पीठम्

## शृङ्गेरी--कडूर् (मैसूर स्टेट्)

*Sir Jagadguru Mahasamsthanam,*
*Sharada Peetham*

**SRINGERI KADUR (Mysore State)**

**N. LAKSHMINARAYANA SASTRY**
PRIVATE SECRETARY

OFFICE OF THE
PRIVATE SECRETARY TO HIS HOLINESS
THE JAGADGURU OF SRI SRINGERI MUTT
**SRINGERI-KADUR**

Camp शृङ्गेरी

Ref. No. 668/62-63

Date १८।१०।१९६२

नेपालदेश-महाराजाधिराजस्य सचिव महोदय श्री पुष्पराजेषु विज्ञप्तिः

समासादितं भवतां पत्रं भवत्संकलितं श्रीभगवच्चन्द्रिकानामकं पुस्तकं च । उभयमपि श्रीजगद्गुरुपीठमलंकुर्वतां श्रीमदभिनवविद्यातीर्थ-महास्वामिनां पादकमलयोः समर्पितमभूत् । महता श्रमेण प्राचीनानि बहूनि पुस्तकान्यवलोक्य धार्मिकलोकोपकाराय तेषां सारः संगृहीतः । अस्य पुस्तकस्य अवलोकनेन प्राचीनानां धार्मिकी भावना कमासीदिति स्पष्टं अवगन्तुं शक्यते । ग्रन्थस्यास्य परिशीलयितृणां नियतं चित्तस्य विकासो भवति ।। ग्रन्थस्य प्रणेतृणां भवतां कुशलं कामयन्ते श्रीचरणा इति निवेद्य विरमामि ।।

इति निवेदयिता
(Sd) N. Lakshminarayana Sastry
*Private Secretary*
To His Holiness the Jagadguru
Mahaswamigalavaru of Sri
SRINGERI MUTT

# श्री द्वारका शारदा पीठ

श्री प. प. जगद्गुरु श्री ११०८ श्री शंकराचार्य स्वामी
श्री अभिनवसच्चिदानन्दतीर्थजी महाराज.

द्वारका (सौराष्ट्र)

क्रमांक १५५०

दिनांक श्रावणशुक्लपूर्णिमा.
मुकाम १८. ८. १९५९ द्वारका

श्री काजी पुष्पराज,
श्री प्रमुख स्वकीय सचिव,
राजदरवार, नेपाल ।

सादर विनिवेदन है कि आपका ५ श्रावण २०१६ (ता.२०.७.५९) का पत्र तथा 'भगवच्चन्द्रिका' नामक पुस्तक प्राप्त हुआ ।

आपका इस ग्रन्थका अवलोकन करते हुए जगद्गुरु श्रीशंकराचार्य महाराजको वडी प्रसन्नता हुई । विविध ग्रन्थोंसे तत्त्वज्ञानप्रतिपादक पद्योंका संग्रह यह माननीय है ।

संस्कृतका शंकरविजयसार, शारदापीठगुरुपरम्परा, कैलाश यात्रा अंग्रेजीका पुस्तक बूकपोष्टद्वारा आपके अवलोकनार्थं भेजे जाते हैं । कैलाशयात्राकी दूसरी प्रति महाराजाधिराज श्रीमहेन्द्र-वीरविक्रम शाहदेवको अर्पण कर दें यह निवेदन है ।

विश्वास है कि आप प्राप्तिसूचना भेज देंगे ।

जगद्गुरुजीके श्रीमहाराजाधिराज श्री महेन्द्रवीरविक्रम शाह बहादुरको और राजकुटुम्वको हार्दिक शुभाशीर्वाद निवेदन करें ।

भवदीय

महाबल भट्ट

श्रीजगद्गुरुजीका मंत्री,

Tel: "DIVINELIFE" Phone: 40

## *The Yoga-Vedanta Forest Academy*

Propagates Yoga and Vedanta, and the Ethical and Spiritual Culture of India, promotes Universal Love, the Unity of Religions, the Ideal of Brotherhood, and the Spirit of Service, by Tuition and Training, Publication of Texts, Correspondence and Propaganda.

**Founder-President**
**Sri Swami Sivananda**
**Vice-President**
**Sri Swami Chidananda**
**Dean:**
**Swami Krishnananda**

**P. O. Sivanandanagar**
**(Himalayas) India.**

**25th January 1959**

Sri Caji Pushpa Raj,
Principal Personal Secretary to
H.M. the King of Nepal, Kathmandu.

Beloved Atman,

Salutations and adorations. Om Namah Sivaya.

I am grateful to your venerable self for sending me two copies of the wonderful compilation of the precious gems of wisdom.

It is a pocket treasure !

Like the selfless bee, you have collected the nectar from so many scriptures- Puranas, Tantras, Upanishads and others-and given their very essence, in their own words, the text, in just a few pages.

One who studies this book--and everyone should read it all at least once a day--would have the wisdom and knowledge that is contained in all the greatest scriptures of India.

I hope the blessings and support of His Majesty will enable this wonderful book to be printed in lakhs of copies so that it could be distributed free to all devotees of the Lord, and spiritual aspirants all over the world. It is well worth it. May God bless you !

With regards, Prem OM.

Kindly convey my Pranams to H. M.

Thy own Self,
(Sd) Sivananda

*Padmabhushan Knight*
*Commander, Darshanacharya*
*Dr. B. L. Atreya*

M. A. D. LITT.

**ATREYA NIWAS**
(A) P. O.
Hindu University
Phone 3006
**VARANASI-5. India.**
**(B)P.O.Rajpur, Pho.36**
**DEHRADUN**

May 18, 1964

Dear Sir,

Thanks for a copy of your interesting and valuable book **Shri Bhagavadchandrika,** so kindly sent by you. It seems to be a very fine collection of passages bearing on Godhead from most of the ancient Hindu Shastras. You deserve praise and congratulation. I will read it and meditate over it.

With best compliments and regards.,

Yours sincerely,

(Sd) B.L. Atreya

Shri Bada Kaji Pushpa Raj
Principal Personal Secretary,
H. M. The King of Nepal.

# निवेदनम्

अक्षरः स्वप्रकाशः स्वानुभवैकवेद्यः परिष्कृतबुद्धौ प्रतिभासमानः वाङ्मनसयोरगोचरः सन्नपि शब्दनाम्नोर्लक्ष्यत्वेन परिज्ञातः अखिलब्रह्माण्डवर्तिनां चराचराणां जगतामाधारः, स्वयं निर्लेपोभूत्वा द्रष्टृस्वरूपतां प्राप्तोऽपि अज्ञानलिप्तः, बुद्धीन्द्रियशरीराणि भोग्यवस्तूनि वासना विषयांश्च "अहमिति" "ममैवेति" मत्वा जननमरणचक्रे मुहुर्मुहुर्भ्रम्यमाणो जीवः कथञ्चिदीक्षासहकृतसद्भवितसत्कर्मानन्यचिन्तनैः प्रकाशितानुग्रहविवेकज्ञानोदयोऽपगतमोहान्धकारः स्वप्रकाशं निर्मलमानन्दस्वरूपं चैतन्यात्मानं साक्षात्कुर्वाणस्तस्मिन्नेव स्वरूपेऽवतिष्ठते । मायाविलासकलितस्वान्तस्तत्स्वरूपविस्मृतिदशायां शान्तिरूपतां विभूत आत्मनोऽन्वेषणाङ्कुरस्य बुद्धावाविर्भावस्तत्परता च परमसौभाग्योदयस्य पन्थाः ।। अस्तु ।।

कस्याञ्चन शुभाशुभकार्यप्रवृत्तौ प्राणिनामभिरुचिं प्रति प्राक्तनकर्मार्जितं वासनापरपर्यायं कर्मैव हेतुत्वेनाङ्गीकर्तव्यपथमवतरति । एतत्प्रभाववशेन नु सर्वव्यापिनो हृदयान्तर्विलसतः परमात्मनोऽनुग्रहवशेन नु अनिर्वचनीयब्रह्मचिन्तनविधौ विशेषतो ममाभिलाषः समुपापद्यत । ततश्च संस्कृते ग्रथितानां दर्शनग्रन्थानामुपनिषदां पुराणसहितानां चावलोकनकर्मणि सौभाग्यं समासादयम् । प्रावर्तिषञ्च संकलयितुं तेषु ग्रन्थेषु प्रतिपादितानि हृदयङ्गमान्यात्मनिरूपकाणि गद्यपद्यवाक्यानि । तानि च संकलितानि वाक्यानि भक्तिरसेन प्लावितहृदयस्य कस्यचिद्विदुषो नयनगोचरतामयासिषुः । वाक्यानीमानि प्रबन्धे

परिणमय्य मुद्रणकार्ये सञ्जाते साधारणानामपि जनानां मनस्यात्म-
विचारभावनां समुदीय सर्वेषु परस्परं समानभावः शान्तिरस-
प्रवाहश्च लोके प्रवहेदिति तस्यैव भक्तस्य सूक्त्या प्रेरितोऽहं तानि
भगवच्चन्द्रिकारूपे परिणतानि संकलितवाक्यानि श्री ५ नेपाल
नरेशानां महेन्द्रवीरविक्रमशाहदेवानां समक्षं प्रादर्शयम्।
राज्यशासनकार्यभारेण तां भगवच्चन्द्रिकां निरीक्षितुं सत्यपि
समयाभावे गुणग्राहितया धर्ममूर्तयश्च ते नृपवराः कंचन समयं
समासाद्यावालुलोकिरे। अस्मात् परमात्मस्वरूपप्रकाशकात्
ग्रन्थात् जनतायाः स्वान्ते शान्तिरसः प्रादुर्भूयानुपमसुखोदयो
भूयात् इति तैर्नृपतिभिर्विविच्य राजकीयसंस्कृतमहाविद्यालयस्य
प्राध्यापकेन आचार्योपाभिधेन साहित्याचार्यपदवीभाजा रामनाथेन
नेपालीभाषायां सरलार्थं विलेख्य विधाय च मुद्रणकार्ये साहाय्यं,
मुद्रिता च सा सहस्रसंख्यापरिमिता भगवच्चन्द्रिका भक्तजनेभ्यो
विद्वद्वर्गेभ्यश्च विनैव मूल्यं व्यतीर्यत। इदानीं तस्याः पुस्तिकाया
प्रायः समाप्ततया आस्तिकजनानां च तत्पुस्तिकाप्राप्तौ विशेषतोऽ
भिरुचिदर्शनेन निवेदितेषु तेषु भूपतिषु पुनरपि मुद्रणायार्थिक
साहाय्यं वितीर्य प्राचीनैः समादरणीयै र्धन्यैर्मान्यैर्मुनिभिर्योगाभ्यासा-
दिना साक्षात्क्रियमाणाऽऽत्मचिन्तनसरणिः ग्रन्थादस्मात् सुगमरीत्या
प्रदर्शिता भवेदिति विचारयतां श्री ५ महाराजाधिराजानां महेन्द्र
वीरविक्रमशाहदेवानां चरणकमलयोः हार्दिकपुष्पाञ्जलिं समर्पयति
श्रीमतामनन्यभक्तः सेवकः—

विक्रम सम्वत् २०२१

A. D. 1965

पुष्पराजः

# Prologue

Everything great or small originates,lives and passes away. Even the universe and its elements such as the Earth, Water, Fire Air, and the Sky with their subtle essence of smell, taste, form (glow lustre), touch and sound pass away. The power of knowledge has, by science, worked out wonders in breaking, analysing and using objects, matters and related energy. That also passes away and is not permanent. Prime Energy or Power and Knowledge are still beyond the scope of science. Power is said to be not separate from the light of knowledge but inherent in knowledge(self pure intelligence), flashing out and in by Self will. Effects proceed from cause, develop in cause and dissolve into cause. In other words, cause procreates effects, develops and ends or dissolves in cause. What then is the ultimate cause or substratum i.e. reality? To know that I am led to study the books of which chiefly are the Sanskrit spiritual scriptures, with commentaries and translations as available. What is found in conclusion is the knower i.e. the knowing-self always present and enduring while all else originate, subsist and dissolve under mere conception and being not genuine reality vanish at the knowledge of the Supreme Self, Omnipresent, Omnipotent, Omniscient, Real Essence Intelligence-Bliss.

Mystery seems in the knowledge itself when the knower's knowing self, which is knowledge, transcendental and immanent, is not conceived or cognised, but only other object is conceived

and cognised. Cognising self-knower and giving up other sense of attachment, one, steadfast in his own Self, unattached and entirely devoted to the omnipresent, omnipotent, omniscient, Ultimate Reality, will resolve into Self Intelligence, beyond name (sound), and form (glow,) and will get the bliss of final beatitude-Pure Self-Existence-Intelligence-Bliss.

Calm concentration to pure knowledge, which is the real knower Self, eliminates knower, knowing and knowledge, remaining only ever pure Self-Effulgence, Real Essence-Intelligence-Bliss.

Indication of the conclusion is the lines collected from these scriptures for my personal meditative concentration and living, getting up into the present form of "Shree Bhagavachchandrika", for which my grateful reverence is to the authors.

A sincere, deliberate and intent study of this book will undoubtedly lead to the perception of genuine real knowing self, pervading all and abiding in all, spirit of equality and goodness in all, no harm and thereby attaining tranquility (pure conscience transcending physical substance and the mind) finally absorbing into the genuine real knowing self, pure intelligence, the ultimate Supreme Self, absolute, pure knowledge, bliss and existence.

I am overwhelmingly indebted to His Majesty Shree Shree Shree Shree Shree Mahendra Veera Vikrama Shaha Deva for the most valuable inspiration under which this book could be completed and also for the financial help granted for the publication and free distribution of the book to the devout use of the devotees.

Five editions have already gone through press, two of which are with Nepali Translation, for the benefit of Nepali knowing people, rendered by Professor Ram Nath Acharya of Government Sanskrit College, Nepal, also part time Professor in Tribhuvan University.

**This is the sixth edition which now includes the Sanskrit Text also with Roman reading and English translation by Professor Gopal Nidhi Tiwari, Vedantacharya, M. A. (English), Professor in Vedanta at Government Sanskrit College and Tribhuvan University, Nepal, to whom I am grateful for the beneficial use of English knowing devotees.**

**Thanks also are due to— Pandit Ram Nath Acharya, Professor of Sanskrit Literature in Government Sanskrit College and Tribhuvana University, Nepal for reading kindly the Sanskrit portion, —to Mr. Narayan Prasad Shrestha Lecturer in English, Patan College and Tribhuvan University for kindly going over the English portion excepting that from Brahmasootra to the end —to Professor Gopal Nidhi Tiwari for reading again the entire book in proofs just going under press and —to Mr. Durga Bahadur Shrestha B. A., B. L., Deputy Personal Secretary to H. M. The King of Nepal, for the help rendered in going through the Proof sheets,- and for their valuable suggestions here and there.**

**Praying to God, the True Ultimate Supreme Essence or Pure Intellect, for the guidance and for prosperous reign and long life of His Majesty and also for peace and prosperity to all, I remain in memory of Pure Intellect Self-effulgence.**

*Pushpa Raj*
A. D. 1967 - S. E. 2023

# Preface

Jnana (the knowledge) is the real means to avoid all trouble of mankind. It is necessary for all human beings in all ages and places. Human beings can live in peace and bliss on the basis of philosophy and religion. Men must attain spiritual enlightenment under which they can obtain solution to every difficulty. The grand truth, in reality, is to fix our mind on that supreme light self. Thus gradually we get prepared for the realisation of the Ultimate Reality. There is no difference between the individual self and the Supreme Self, the Ultimate Reality or Knowledge. Only equanimity or identity remains and all duality dissolves into the Ultimate Reality, the identical essence. The knower, the knowing and the knowable become only knowledge, identical self, that is, pure self-effulgence, free from falsehood. So absolute equality or identical knowledge is the peaceful pure Ultimate Reality. Men should study the books on spirituality for this truth. The essence of the spiritual scriptures such as the Puranas, Tantras, Yoga, Brahmasootras, Upanishads etc. is the constant-existent conscious bliss or self-effulgence.

Shree Bada Kaji Pushpa Raj has collected the valuable verses and passages from most of the Scriptures like the Puranas, Tantras, Yoga, Brahmasootras, Upanishads etc in this book Shree Bhagavachchandrika. Here is given knowledge, the basis of all. All other things are proved unreal due to the state of possess-

ing no separate existence from the basis (knowledge). Creation and dissolution are no more than flashing out and flashing in of the Supreme Knowledge (the Supreme Soul). Through knowledge the universe is known as the mirage. In the ultimate state of realisation there is no difference between the knower and the knowable. Duality is caused by illusion and its reflection. Ignorance should be removed through pure intellect and thereby the supreme knowledge should be realised for avoiding all these defects. For purification of intellect, men must follow unselfish good action, identical devotion and non-dual intelligence. These are clearly expressed in the verses and passages collected in this Shree Bhagavachchandrika. So, I hope, this collection to be really helpful to the devotion of knowledge, the self-effulgence.

I am greatly indebted to Bada Kaji Pushpa Raj for his real philosophical experience and great inspiration given to me in translating this divine elucidation (moonlight) viz Shree Bhagavachchandrika. I also owe a great debt to the classical commentators and the modern writers in the field of interpretation and translation.

Above all, it gives me great pleasure to have the honour of showing deep devotion to His Majesty King Mahendra Veera Vikrama Shaha Deva, who has inspired us out of his inborn philosophy and under whose blessing and support the devotees of knowledge want to serve humanity and realise the grand truth '"All this is Brahma (the Ultimate Reality)". His Majesty has also granted financial aid in printing this divine collection and distributing free to devotees of knowledge many times for their divine bliss.

The text is given here in Roman script also for those who cannot read Devanagari scripts. It is hoped that this spiritual collection will be read with pleasure and faith on self by

**all devotees of the supreme knowledge every day for whom it is meant. May self knowledge embrace all !**

GOPAL NIDHI TIWARI

Kathmandu.
A. D. 1967

## KEY

स्वराः– अ आ इ ई उ ऊ ऋ ॠ ए ऐ ओ औ

Vowels- a ā i ee u oo ri ree e ai o au

अं अः

am ah

व्यञ्जनानि– क् ख् ग् घ् ङ् च् छ् ज् झ् ञ्

Consonants:- k kh g gh ṅ ch chh j jh n̄

ट् ठ् ड् ढ् ण् त् थ् द् ध् न्

ṭ ṭh ḍ ḍh ṇ t th d dh n

प् फ् ब् भ् म् य् र् ल् व् श्

p ph b bh ṁ y r l v sh

ष् स् ह् क्ष् त्र् ज्ञ्

sh s h ksh tr jn

अङ्काः– १ २ ३ ४ ५ ६ ७ ८ ९ ०

Numbers-- 1 2 3 4 5 6 7 8 9 0

*Note;-* **For lack of types with signs on letters such as ā ṅ, ṭ, merely 'a' is used to denote both 'अ' and 'आ' on one hand and, on the other hand, for want of different letters of nasal sound to represent 'ङ' 'ञ' and 'ण' in addition to 'n' for 'न' simply 'n' is used also to represent 'ङ', 'ञ' and 'ण'. Each verse or passage is with numbers, somewhere letters, denoting corresponding sections and subsections of the text.**

ग्रन्थाः

| | | |
|---|---|---|
| श्री भागवतम्– | (१) | श्रीधरस्वामीविरचितभावार्थ-दीपिकासमेतम्– निर्णयसागरयन्त्रालय बम्बई |
| | (२) | श्रीबंशीधरटीकासमेतम्– श्रीवेंकटेश्वर प्रेस बम्बई |
| | (३) | श्रीअन्वितार्थटीकासमेतम् श्रीवेंकटेश्वर प्रेस बम्बई |
| श्रीदेवीभागवतम्– | | श्रीवेंकटेश्वर प्रेस बम्बई |
| श्रीशिवमहापुराणम्– | | ” |
| श्रीविष्णुमहापुराणम्– | | ” |
| श्रीब्रह्मवैवर्तमहापुराणम्– | | ” |
| श्रीमहाभारतम्– | | श्रीनीलकण्ठटीकासमेतम् श्रीचित्रशालाप्रेस पूना |
| श्रीमदध्यात्मरामायणम् | | श्रीवेंकटेश्वर प्रेस बम्बई |
| श्रीतन्त्रराजतन्त्रम्– | | मनोरमाव्याख्यासहितम् श्रीआर्थरएवलनेन संपादितम् |
| श्रीज्ञानार्णवतन्त्रम्– | | आनन्दाश्रमग्रन्थावली–पूना |
| श्रीकुलार्णवतन्त्रम्– | | श्रीतारानाथ विद्यारत्नेन संपादितम् श्रीआर्थरएवलनेन प्रवर्तितम् |

| | |
|---|---|
| श्रीमहानिर्वाणतन्त्रम्– | कुलावतहरिहरानन्दभारती<br>टीकासमेतम्<br>श्रीआर्थर एवलनेन संपादितम् |
| श्रीकुलचूडामणितन्त्रम् | " |
| श्रीकालीविलासतन्त्रम्– | " |
| श्रीशारदातिलकम्– | राघवटीकासमेतम्<br>श्रीआर्थरएवलनेन संपादितम् |
| श्रीप्रपञ्चसारतन्त्रम्– | श्रीपद्मपादाचार्य-<br>विवरणसमेतम्<br>श्रीआर्थरएवलनेन संपादितम् |
| श्रीगन्धर्वतन्त्रम्– | काश्मीरप्रकाशितम् |
| अकुलवीरतन्त्रम्– | कलकत्ता संस्कृत सिरीज नं. ३ |
| कुलानन्दतन्त्रम्– | " |
| कौलज्ञाननिर्णयः– | " |
| ज्ञानकारिका– | " |
| रुद्रयामलम्– | श्रीजीवानन्दसंपादितम्<br>कलकत्ता |
| श्रीशक्तिसङ्गमतन्त्रम्– | प्राचीनहस्तलिखितम् |
| श्रीमदूर्मिकौलार्णवतन्त्रम्– | " |
| श्रीकौलरहस्यम्– | " |
| श्रीब्रह्मयामलम्– | " |

| | |
|---|---|
| श्रीताराहस्यम्– | " |
| श्रीमहाषोडषीशिरच्छदंकरवीरयागे परातन्त्रम् | " |
| श्रीकालोत्तरमहातन्त्रम्– | " |
| श्रीकालानलतन्त्रम्– | " |
| श्रीअमनस्कयोगशास्त्रम्– | " |
| त्रिपुरारहस्यम्– | सरस्वती भवन टेक्स्ट्स बनारस |
| योगिनीहृदयम्– | " |
| श्रीविज्ञानभैरवः | काश्मीर संस्कृत ग्रन्थावली ८ |
| योगदर्शनम् | काश्मीर संस्कृत सिरीज ग्रंथांकः ६७ |
| विवेकचूडामणिः– | जगदीशप्रसादटीकासमेतम् |
| श्रीयोगवासिष्ठसारः– | काशी |
| श्रीयोगवासिष्ठः– | तात्पर्यप्रकाशव्याख्यासहितः निर्णयसागरप्रेस, बम्बई |
| ब्रह्मसूत्रम्– | शांकरभाष्य–भाष्यरत्न–प्रभा–भामति–न्यायनिर्णय–व्याख्या-समेतम् श्रीवेंकटेश्वर प्रेस, बम्बई |
| सिद्धान्तदर्शनम्– | निरञ्जनभाष्यसमेतम् आनन्दाश्रम, पूना |

| | |
|---|---|
| कौलोपनिषत्– | भास्कररायभाष्यसमेतम् आगमानुसन्धानसमिति कलकत्ता श्रीआर्थरएवलनेन संपादितम् |
| त्रिपुरामहोपनिषत्– | " |
| भावनोपनिषत्– | " |
| बह्वृचोपनिषत्– | " |
| अरुणोपनिषत्– | " |
| कालिकोपनिषत्– | " |
| तारोपनिषत्– | " |
| ईशावास्योपनिषत्– | शांकरभाष्यसमेतम्–पूना आनन्दाश्रम ग्रन्थावली |
| केनोपनिषत्– | " |
| कठोपनिषत्– | " |
| प्रश्नोपनिषत्– | " |
| मुण्डकोपनिषत्– | " |
| माण्डूक्योपनिषत्– | |
| गौडपादीयभाष्यसमेतम् | " |
| तैत्तिरीयोपनिषत्– | " |
| ऐतरेयोपनिषत्– | " |
| छांदोग्योपनिषत्– | " |
| बृहदारण्यकोपनिषत्– | " |

## अनुक्रमणिका

## अनुक्रमणिका

## सांकेतिकाङ्काः क्रमिकाः

पुराणेषु—

| | | |
|---|---|---|
| स्कन्धः । | अध्यायः । | श्लोकः |
| वा अंशः । | अध्यायः । | श्लोकः |
| वा खण्डः । | अध्यायः । | श्लोकः |
| वा अध्यायः । | श्लोकः | |
| वा श्लोकः । | | |

विशेषाक्षरसांकेताः—

श्रीशिवमहापुराणे—

रु——रुद्रसंहिता    को—कोटिरुद्रसंहिता

कै—कैलाशसंहिता    वा—वायवीयसंहिता    उत्तरभागः

श्रीमहाभारते——

| | | |
|---|---|---|
| पर्व । | अध्यायः । | श्लोकः |

६—भीष्मपर्व श्रीमद्भगवद्गीता    १२—शान्तिपर्व

श्रीमदध्यात्मरामायणे    उ उत्तरकाण्डपञ्चमसर्गः
श्रीरामगीताश्लोकांकः

तन्त्रेषु—

| | |
|---|---|
| पटलः । | मन्त्रः |
| वा । | वा |
| उल्लासः । | श्लोकः |

प. — पटलः

प्र. अ. — प्रथमाधिकारः

शक्तिसङ्गमतन्त्रे—

प्र. —अक्षोभ्यमहोग्रताराखण्ड— प्रथमपटलः

उ.—उत्तरमतपटलः

ता.—तारासूक्तपटलः

सु.—सुन्दरीखण्डः

योगदर्शने — पादः । सूत्रम्

सांख्यदर्शने — अध्यायः । सूत्रम्

अन्यपुस्तकेषु — अध्यायः । श्लोकः । वा श्लोकः

योगवासिष्ठे—

प्रकरणम्—। सर्गः । श्लोकः

१— वैराग्यप्रकरणम् । २— मुमुक्षुव्यवहारप्रकरणम्

३— उत्पत्तिप्रकरणम् । ४— स्थितिप्रकरणम्

५— उपशमप्रकरणम्

६।१-निर्वाणप्रकरणपूर्वार्द्धम् ६।२-निर्वाणप्रकरणोत्तरार्द्धम्

ब्रह्मसूत्रे—

अध्यायः । पादः । सूत्रम्

सिद्धान्तदर्शने—

पाठः । । प्रपाठः । सूत्रम्

१– प्रकृतिपाठः  २– पुरुषपाठः

३– मुक्तिपाठः  ४– ज्ञानपाठः

उपनिषत्सु–

मन्त्रः वा श्रुतिः वा श्लोकः

वा

| | |
|---|---|
| खण्डः | मन्त्रः |
| वा | वा |
| प्रश्नः | श्लोकः |
| वा | वा |
| अध्यायः | अनुवाकः |
| | वा |
| | खण्डः |

वा

| | | |
|---|---|---|
| अध्यायः | वल्लिः | मन्त्रः |
| वा | वा | वा |
| मुण्डकः | खण्डः | श्रुतिः |
| | वा | वा |
| | ब्राह्मण | श्लोकः |

माण्डुक्योपनिषदि गौ-गौडपादीयकारिका

श्री:

Shree Glory Supreme Effulgence

ॐ

Om (Divine sound or salutation to the substratum of sound, or Supreme Spirit).

यस्येच्छात इदं सर्वं सततं यश्च केवलम् ।
तं नित्यं सच्चिदानन्दं प्रणतोऽस्मि स्वसंविदम् ।

YASYECH-CHHATA IDAM SARVAM SATATAM YASCHA KEVALAM
TAM NITYAM SACHCHID-ANANDAM PRANATOSMI SVASAMVIDAM

By whose will all this (proceeds), who is yet
Eternally alone.
To Him, the constant real consciousness bliss
Self intellect, I bow down

तद्भक्तिसंश्रीताधीतपुस्तकेभ्यो यथामति ।
संगृहीतमिदं सर्वमात्मज्ञानप्रसादकम् ।

TAD BHAKTI-SAMSHRITADHEETA-PUSTAKEBHYO YATHA-MATI
SANGRIHEETAM-IDAM SARVAM-ATMA-JNANA-PRASADAKAM

From books studied through devotion to Him (that Supreme Spirit) here is, according to understanding, collected all this illuminating self-knowledge.

येन केनापि दोषेण या च काचित्त्रुटिर्भवेत् ।
शोधनीया बुधैर्नूनं ज्ञानविज्ञानयुक्तिभिः ।

**YENA KENAPI DOSHENA YA CHA KA-CHIT-TRUTIR-BHAVET**
**SODHANEEYA BUDHAIR-NOONAM JNANA-VIJNANA-YUKTIBHIH**

Any shortcomings, which, through any ignorance, might happen, should be, surely, corrected by the wise by means of knowledge and realisation.

पिता माता गुरुर्भूपः सर्वं यत्परिनिष्ठितम् ।
तत्स्वाधिपतये भक्त्या महेन्द्राय समर्पये ।

**PITA MATA GURUR-BHOOPAH SARVAM YAT PARINISHTHITAM**
**TAT-SVADHIPATAYE BHAKTYA MAHENDRAYA SAMARPAYE**

Father, mother, teacher, king, all depend on that I offer that to our sole sovereign Mahendra by devotion.

प्रपन्नोऽस्मि सर्वमूलं प्रपन्नाभयदं शिवम् ।
यन्मायायाऽपि विबुधा मुह्यन्ति ज्ञानकाशया ।

**PRAPANNOSMI SARVA-MOOLAM PRAPAN-NABHAYADAM SHIVAM**
**YAN-MAYAYAPI VIBUDHA MUHYANTI JNANA-KASHAYA**

I fall down at Bliss(Supreme Lord). the source of all and giver of fearlessness to devotees, through whose maya (power of illusion) even gods (the wise) get deluded with the mirage of intellect.

यत्प्रभावादहमिदं यत्प्रभावाच्च केवलम् ।
प्रसीदतु प्रभावज्ञः प्रभातीतप्रकाशया ।

**YAT-PRABHAVAD-AHAM-IDAM YAT PRABHAVACH-CHA KEVALAM**
**PRASEEDATU PRABHAVAJNAH PRABHATEETA-PRAKASHAYA**

May that (Glorious), the knower of power, be pleased with selfsplendour beyond lustre by whose power I and this are and by whose power mere self is.

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ।

**SARVAM KHALVIDAM BRAHMA TAJ-JA-LANITI SHANTA UPASEETA**

Really all this is Brahma (Supreme Spirit), having originated from, absorbing in and existing in It. One should meditate upon It calmly.

तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ।

**TACH-CHHOODDHAM VIMALAM VISHOKAM-AMRITAM SATYAM**
**PARAM DHEEMAHI**

I meditate upon that pure, taintless (glorious), griefless, immortal, real, Supreme Spirit.

स्वप्रकाशानुभवचित्स्पन्दं प्रतिभान्यदिवभानमपि ।
ज्ञातं भामात्रं प्रज्ञानघनं सन्महिम्नि स्वे महीयते ।

**SVA-PRAKASHANUBHAVA-CHIT-SPANDAM PRATIBHANYAD-IVA-BHANAM-API**
**JNATAM BHA-MATRAM PRAJNANA-GHANAM SANMAHIMNI SVE MAHEEYATE**

Self luminous conscience, intellect, modulating, reflect shining different as it were, is known self-illumination pure knowledge and genuine-existence shining in self infinite glory.

ज्ञानमेव ज्ञेयं स्पन्दभानं नान्यत् किञ्चनाज्ञानम् ।
अस्पन्दभानन्दं चित् सन्मात्रं राजते लीनसर्वम् ।

JNANAM-EVA JNEYAM SPANDA-BHANAM NANYAT KINCHANAJNANAM
ASPANDA-BHANANDAM CHIT SAN-MATRAM RAJATE LEENA-SARVAM

The knowledge is verily the knowable through appearance of motion, nothing else ignorance. The constant light bliss intelligence genuine self illumines pure, dissolving all, in self.

न नामरूपं न सदसद्वा नतेजस्तमः प्रतिभात्मभानम् ।
चिद्भास्वरूपं स्वच्छानन्दं सज्ज्ञमात्रभानं वृत्यतीतभानम् ।

NA NAMA-ROOPAM NA SAD-ASAD-VA NA TEJAS-TAMAH PRATIBHATMA-BHANAM
CHIDBHA-SVAROOPAM SVACHCHHANANDAM SAJ-JNA-MATRA-BHANAM
VRITY-ATEETA-BHANAM

There is neither name nor form, neither cause nor effect, neither light nor darkness but self-illuminating intellect, self bright knowledge, pure bliss, real intellect splendour and self luminosity free from principle of activity.

ॐशान्तिः ॐशान्तिः ॐशान्तिः ।

OM SHANTIH OM SHANTIH OM SHANTIH

Om peace ! Om peace ! Om peace. !

विक्रम संवत् २०१५

Vikrama Samvat 2015
A. D. 1960

श्री:

ॐ

जस्को इच्छा बढी सूक्ष्म स्थूल नाम
रूप स्पन्द हुन्छ रहन्छ विलाउं छ ।
जो इच्छा आदि प्रभा कल्पना लेप न भै
स्वच्छ स्वतन्त्र प्रकाश छ ।
जो सत् चित् आनन्द लक्ष्य गरिने
केवल स्वानुभव निर्वृति स्वरूप छ ।
आत्मबुद्धिमा प्रकाश रहेको त्यही
परमात्माको नै शरण पर्छु म ।

संवत् २०१६

विवर्द्धमानया यस्येच्छया सूक्ष्म–स्थूल–
नाम–रूपाणि स्पन्दन्ते विद्यन्ते विलीयन्ते च ।
याचेच्छाप्रभृतिकल्पना निर्लिप्ता भूत्वा
स्वच्छरूपेण स्वातन्त्र्यरूपेण च प्रकाशते ।
यः सच्चिदानन्दरूपेण लक्ष्यः केवलं स्वा-
नुभवैकवेद्यो निर्वृतिस्वरूपः सन्नवभासते ।
आत्मबुद्धौ प्रकाशमानं तमेव परमात्मानं
प्रपन्नोऽस्मि ।

विक्रम सम्वत् २०१६

**VIVARDHA-MANAYA YASYE-CHCHHAYA SOOKSHMA-STHOOLA-
NAMA-ROOPA-NI SPANDANTE VIDYANTE VILEEYANTE CHA
YACHECHCHHA-PRABHRITI-KALPANA NIR-LIPTA BHOOTVA
SVACHCHHA-ROOPENA SVA-TANTRYA-ROOPENA CHA PRAKASHATE
YAH SACH-CHID-ANANDA ROOPENA LAKSHYAH KEVALAM SVA-
NUBHAVAIKA-VEDYO NIR-VRITI-SVA-ROOPAH SAN-NAVABHASATE
ATMA-BUDDHAU PRAKASHA-MANAM TAM-EVA PARAMATMANAM
PRAPAN-NOSMI**

I take shelter in (enter into) that very Supreme Self illuminating in self intellect by whose expanding will, subtle and gross, name, form etc originate, exist and dissolve, who untouched by imagination of will etc, shines pure self and free, and who is thought as the real knowledge bliss self (self effulgence genuine conscience bliss) and realised through self experience and illumines being pure real bliss.

Vikrama Samvat 2016
A. D. 1960

श्रीः

Shree Glory

ॐ

Om Infinite Sound and its substratum Supreme Spirit

यत्तेजसा इदमदः यः प्रकाशः सनातनः ।
तं चिदानन्दसन्मात्रं प्रपन्नोस्मि स्वमात्मकम् ।।

**YAT-TEJASA IDAM-ADAH YAH PRAKASHAH SANATANAH**
**TAM CHID-ANANDA-SAN-MATRAM PRAPANNOSMI SVAM-ATMAKAM**

I bow down to that by whose light this and that are and He is, who is eternal, light, pure intelligence-bliss-existence and own self.

यदिच्छया संकलनं त्रिप्रकाशमितमिदम् ।
स्वधीतं तत्प्रसादेन ज्ञानं भातु स्वानन्तरम् ।।

**YAD-ICH-CHHAYA SANKALANAM TRI-PRAKASHAM-ITAM-IDAM**
**SVA-DHEETAM TAT-PRASADENA JNANAM BHATU SVANANTARAM**

May self knowledge light inside self intellect through His grace by whose will, well studied this collection passed three editions.

गन्धरसरूपस्पर्शशब्दविकृतिप्रकृतीक्षा–
प्रभवाप्रभवानुभवस्वप्रकाशमात्र हे ।
तव शरणं नयतु मां हृदि धिष्ठितं सत्
तनोतु स्वात्मानमवतु संसारतापाज्ञानात् ।।

**GANDHA-RASA-ROOPA-SPARSHA-SHABDA-VIKRITI-PRAKRITEEKSHA
PRABHAVAPRABHAVANUBHAVA-SVA-PRAKASHA-MATRA HE
TAVA SHARANAM NAYATU MAM HRIDI DHISTHITAM SAT
TANOTU SVATMANAM AVATU SAMSARA TAPAJNANAT**

Smell, taste, light, touch, sound, effect, cause, will, disturbing (procreating), calm, intellect, self light (self existence) alone oh !

Lead me to your genuine shelter residing inside heart (intellect).

Spread selfsplendour and save me from ignorance incarnating as worldly worries.

भक्त्या तवानुग्रहा–
नुरक्तविवेकमनः कलनशान्तौ ।
ज्ञप्त्यात्मनि स्फुरतु
धिष्ठितविमलप्रज्ञानघनं शश्वत् ।।

विक्रम संवत् २०१८

**BHAKTYA TAVANUGRAHANURAKTA-VIVEKA-MANAH KALANA-SHANTAU JNAPTY-ATMANI SPHURATU DHISTHITA-VIMALA-PRAJNANA-GHANAM SHASHVAT**

May self abiding pure cognition shine eternally in knowing (consciousness)self on the quelling of thoughts or worries of the mind through discrimination intent in your grace by devotion.

Vikrama Samvat 2018
A. D. 1962

ॐ

Om Infinite Sound and Its Substance Self-Intellect

इदं महद्भूतमनन्तमपारं विज्ञानघन एव ।

बृहदारण्यकोपनिषत् २।४।१२

विक्रम संवत् २०२१

IDAM MAHAD-BHOOTAM-ANANTAM-APARAM VIJNANA-GHANA EVA
VRIHAD-ARANYAKOPANISHAT

This Great Being is just the infinite endless pure consciousness. 2/4/12

Vikrama Sambat 2021
A.D. 1965

ॐ तत्सद् ब्रह्मणे नमः

**OM TAT-SAD-BRAHMANE NAMAH**

Om Salutation to that real Brahman (the Supreme Spirit)

श्रीमद्भागवतम्

**SHREE MAD-BHAGAVATAM**

ॐ नमो भगवते वासुदेवाय ।

**OM NAMO BHAGAVATE VASUDEVAYA**

Om Salutaion to Lord Vasudeva

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गोऽमृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ।। १।१।१

**JANMADY-ASYA YATO-NVAYAD-ITARATASH-CHARTHESVABHIJNAH SVARAT**
**TENE BRAHMA HRIDA YA ADI-KAVAYE MUHYANTI YAT-SOORAYAH**
**TEJO-VARI-MRIDAM YATHA VINI-MAYO YATRA TRISARGOMRISHA**
**DHAMNA SVENA SADA NIRASTA-KUHAKAM SATYAM PARAM DHEEMAHI**

We meditate on the real Supreme Lrod who has always destroyed the entire ignorance through His own self-shining light and from whom proceed the creation, protection, and destruction of the universe, yet HE remains constantly real, being detached from the unreal. HE is conscious and self-shining. He, it is, who lighted, through the heart (the intellectual power) to the first scholar, the knowledge of the Veda, the Brahma, about which the great scholars ( the wise ) get confused. It is He in whom the three fold (embodied in the three states of waking, dreaming and dreamless sleep or gross, subtle and casual)creation appears as real (due to the reality of the foundation) like the illusion of water in rays, of land in water, and of water in land. 1/1/1

विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितम् ।
सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ॥ २।६।३९

VI-SHUD-DHAM KEVALAM JNANAM PRATYAK-SAMYAG-AVASTHITAM
SATYAM POORNAM-ANADYANTAM NIR-GUNAM NITYAM-ADVAYAM

The Lord is alone, pure, knowledge, Self-existence, omnipresent, Real, infinite, having neither beginning nor end, devoid of qualities, eternal and without a second. 2/6/39

अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहम् ॥ २।६।३२

AHAM-EVASAM-EVAGRE NANYAD-YAT-SAD-ASAT PARAM
PASHCHAD-AHAM YAD-ETACH-CHA YOVASHISHYETA SOSMY-AHAM

(The Lord says). In the beginning there was only just I, nothing else real or unreal. Afterwards I am. I am also all this creation. I am also what remains after dissolution. 2/9/32

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथा भासो यथा तमः ।। २।९।३३

RITERTHAM YAT-PRATIYETA NA PRATEEYETA CHATMANI
TAD-VIDYAD-ATMANO MAYAM YATHA BHASO YATHA TAMAH

Without being a reality what appears in Atman (Self), and that the reality in Atman (Self) is not cognised by the ignorant or ignorance, know these as Maya (illusion) of Atman (Self) like phantom of two moons,like Tamah (darkness or ignorance) or Rahu. 2/9/33

अन्वयव्यतिरेकाभ्यां यत्स्यात्सर्वत्र सर्वदा । २।९।३५।।

ANVAYA VYATIREKABHYAM YAT SYAT SARVATRA SARVADA

That ultimate Reality is always everywhere due to its presence in the real and different form from the unreal. 2/9/35 1/2

शश्वत्स्वरूपमहसैव निपीतभेद–
मोहाय बोधधिषणाय नमः परस्मै ।
विश्वोद्भवस्थितिलयेषु निमित्तलीला–
रासाय ते नम इदं चक्रमेश्वराय ।। ३।९।१४

SHASHVAT SVAROOPA-MAHASAIVA NIPEETA-BHEDA-
MOHAYA BODHA-DHISHANAYA NAMAH PARASMAI
VISHVODBHAVA-STHITI-LAYESHU NIMITTA-LEELA-
RASAYA TE NAMA IDAM CHAKRIMESVARAYA

Salutation to the Supreme Lord who drives away all the difference and delusion by the constant light of his own self and is the foundation of knowledge. We offer this salutation to You, the Supreme Lord, who is the source of the instrumental cause (volition) and material cause (play of illusion), in creation, protection and immersion of the universe. 3/9/14

अनादिरात्मा पुरुषो निर्गुणः प्रकृतेः परः ।
प्रत्यग्धामा स्वयं ज्योतिर्विश्वं येन समन्वितम् ।। ३।२६।३

ANADIRATMA PURUSHO NIR-GUNAH PRAKRITEH PARAH
PRATYAG-DHAMA SVAYAM JYOTIR-VISHVAM YENA SAMANVITAM

The Self, which pervades the universe, is the Supreme Being, without the beginning, devoid of qualities, beyond the primary power (Prakriti), the inner self effulgent light. 3/26/3

ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् । ३।३२।२६।।

**JNANA-MATRAM PARAM BRAHMA PARAMATMESHWARAH PUMAN**

The Supreme Reality is knowledge alone, the Supreme Spirit, Lord or God and Person. 3/32/26 1/2

एकः शुद्धः स्वयंज्योतिर्निर्गुणोऽसौ गुणाश्रयः ।
सर्वगोऽनावृतः साक्षी निरात्मात्मात्मनः परः ।। ४।२०।७

**EKAH SHUD-DHAH SVAYAM-JYOTIR-NIR-GUNOSAU GUNASHRAYAH**
**SARVAGO-NAVRITAH SAKSHI NIRATMATMANAH PARAH**

The soul is one, pure, self light, free from qualities, abode of qualities, pervading all, undeluded, witness, devoid of the body and beyond mind (mental functions). 4/20/7

यत्तद्विशुद्धानुभवमात्रमेकं
स्वतेजसा ध्वस्तगुणव्यवस्थम् ।
प्रत्यक् प्रशान्तं सुधियोपलम्भनं
ह्यनामरूपं निरहं प्रपद्ये ।। ५।१९।४

**YAT-TAD-VISHUD-DHANUBHAVA-MATRAM-EKAM**
**SVA-TEJASA DHVASTA-GUNA-VYAVASTHAM**
**PRATYAK PRASHANTAM SUDHIYOPALAMBHANAM**
**HY-ANAMA-ROOPAM NIRAHAM PRAPADYE**

I take refuge in the Lord, who is that only pure experience, without a second, removing the effect of qualities (states of waking, dream and dreamless sleep) through his own self light, inner-self, extremely quiet, attainable through pure mind, devoid of name and shape, and without egotism. 5/19/4

एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः । ७।६।२१।।

**EKA EVA PARO HYATMA BHAGAVAN-EESHVARO-VYAYAH**

The self is only one supreme indestructible, and omnipotent Lord. 7/6/21 1/2

आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ।
अविक्रियः स्वदृग्घेतुर्व्यापकोऽसङ्ग्यनावृतः ।। ७।७।१९

**ATMA NITYO-VYAYAH SHUDDHA EKAH KSHETRA-JNA ASHRAYAH**
**AVI-KRIYAH SVA-DRIGGHETUR-VYAPAKO-SANGY-ANAVRITAH**

The soul is alone, constant, indestructible, pure, omniscient, asylum, unchangeable, self-seer, centre of all causes, omnipresent, absolute and undeluded. 7/7/19

सुखमस्यात्मनो रूपं सर्वेहोपरतिस्तनुः । ७।१३।२६।।

**SUKHAM-ASYATMANO ROOPAM SARVEHOPARATIS-TANUH**

Happiness is the sign of this self shining free of all gestures. 7/13/26 1/2

एकस्त्वमात्मा पुरुषः पुराणः
सत्यः स्वयंज्योतिरनन्त आद्यः ।
नित्योऽक्षरोऽजस्रसुखो निरञ्जनः
पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः ॥ १०।१४।२३

**EKAS-TVAM-ATMA PURUSHAH PURANAH**
**SATYAH SVAYAM-JYOTIRANANTA ADYAH**
**NITYO-KSHARO-JASRA-SUKHO NIRANJANAH**
**POORNO-DVAYO MUKTA UPADHITO-MRITAH**

Thou art one self that is Supreme Being, primeval, real, self-light, infinite, foremost, permanent, immutable, constant bliss, unstained, full, non-dual, free from limitation or ignorance and immortal. 10/14/23

सत्यं ज्ञानमनन्तं यद् ब्रह्मज्योतिः सनातनम् । १०।२८।१५।।

**SATYAM JNANAM-ANANTAM YAD BRAHMA-JYOTIH SANATANAM**

That Brahman (Ultimate Reality) is the self-luminous, truth, knowledge, infinite and eternal. 10/28/15 1/2

विशुद्धविज्ञानघनं स्वसंस्थया
समाप्तसर्वार्थममोघवाञ्छितम् ।
स्वतेजसा नित्यनिवृत्तमाया-
गुणप्रवाहं भगवन्तमीमहि ॥ १०।३७।२२

**VISUDDHA-VIJNANA-GHANAM SVA-SAMSTHAYA**
**SAMAPTA-SARVARTHAM-AMOGHA-VANCHHITAM**
**SVATEJASA NITYA-NIVRITTA-MAYA-**
**GUNA-PRAVAHAM BHAGAVANTAM-EEMAHI**

I take refuge in the Lord, who is pure, all-Knowledge, who remaining in His Bliss has attained all objects of His unerring desire, who, through Self light, has always dispelled Maya (illusion) and its current of qualities. 10/37/22

नमो विज्ञानमात्राय सर्वप्रत्ययहेतवे ।
पुरुषेशप्रधानाय ब्रह्मणेऽनन्तशक्तये ॥ १०।४०।२९

**NAMO VIJNANA-MATRAYA SARVA-PRATYAYA-HETAVE**
**PURUSHESHA-PRADHANAYA BRAHMANE-NANTA-SHAKTAYE**

Salutation to the only Pure Intelligence the Cause of all knowledge, known as Purusha (Person self), Isha (Lord), Pradhana (Primary Power), Brahman ( Supreme Spirit ), the Omnipotent. 10/40/29

आत्मा ज्ञानमयः शुद्धो व्यतिरिक्तोऽगुणान्वयः । १०।४७।३१।।

**ATMA JNANA-MAYAH SHUDDHO VYATIRIKTO-GUNANVAYAH**

The Self is all intelligence, pure, free (from ignorance), unattached to any quality.

10/47/31 1/2

नात्मनोऽन्येन संयोगो वियोगश्चासतः सति ।
तद्धेतुत्वात्तत्प्रसिद्धेर्दृग्रूपाभ्यां यथा रवेः ।। १०।५४।४६

**NATMANO-NYENA SAM-YOGO VI-YOGASH-CHASATAH SATI**
**TAD-DHETU-TVAT-TAT-PRASIDDHER-DRIG-ROOPABHYAM YATHA RABEH**

O' virtuous woman ! There is neither union nor disunion of self with other objects, which are unreal known merely in the source of self inteligence like that of the sun with the eye, and the form.

10/54/46

नमामि त्वाऽनन्तशक्तिं परेशं
सर्वात्मानं केवलं ज्ञप्तिमात्रम् ।
विश्वोत्पत्तिस्थानसंरोधहेतुं
यत्तद्ब्रह्म ब्रह्मलिङ्गं प्रशान्तम् ।। १०।६३।२५

**NAMAMI TVANANTA-SHAKTIM PARESHAM**
**SARVATMANAM KEVALAM JNAPTI-MATRAM**
**VISHVOT-PATTI-STHANA-SAMRODHA HETUM**
**YAT TAD-BRAHMA BRAHMA-LINGAM PRASHANTAM**

I bow down to you who are great Lord, having infinite power, soul of all, pure, knowledge only, cause of creation,

protection and destruction of the universe, characteristic of Brahma, calm and Brahma (Ultimate Reality).
10/63/25

एकं स्वयं ज्योतिरनन्यमव्ययं
स्वसंस्थया नित्यनिरस्तकल्मषम् ।
ब्रह्माख्यमस्योद्भवनाशहेतुभि:
स्वशक्तिभिर्लक्षितभावनिर्वृतिम् ।। १०।७०।५

**EKAM SVAYAM JYOTIRANANYAM-AVYAYAM**
**SVA-SAMSTHAYA NITYA-NIRASTA-KALMASHAM**
**BRAHMAKHYAM-ASYOD-BHAVA-NASHA-HETUBHIH**
**SVA-SHAKTIBHIR-LAKSHITA-BHAVA-NIRVRITIM**

(Lord Krishna — incarnation of God — meditates upon His own Self, that is,) One ( Infinite ), self-effulgence, non-dual, immutable, constantly free from ignorance, self-existence and bliss, marked by his own powers, the causes of the rising, living and absorbing of this universe and known as the Ultimate Reality Bliss.
10/70/5

तद्ब्रह्म परमं सूक्ष्मं चिन्मात्रं सदनन्तकम् । १०।८८।१०।।

**TAD-BRAHMA PARAMAM SOOKSHMAM CHIN-MATRAM SAD-ANANTAKAM**

The Ultimate Reality ( Brahma ) is extremely subtle, the pure consciousness, the genuine Reality and the infinite Eternity.
10/88/10 1/2

सत्वं रजस्तम इति त्रिवृदेकमादौ
सूत्रं महानहमिति प्रवदन्ति जीवम् ।
ज्ञानक्रियार्थफलरूपतयोरुशक्ति
ब्रह्मैव भाति सदसच्च तयोः परं यत् ।। ११।३।३७

**SATVAM RAJAS-TAMA ITI TRIVRID-EKAM-ADAU**
**SOOTRAM MAHAN-AHAM-ITI PRAVADANTI JEEVAM**
**JNANA-KRIYARTHA-PHALAROOPATAYORUSHAKTI**
**BRAHMAIVA BHATI SAD-ASACHCHA TAYOH PARAM YAT**

The only one Ultimate Reality (Brahma) is described as the threefold Nature (Prakriti) with purity, emotion and ignorance (Satwa, Raja and Tama) in the beginning of the creation. Then that is described as great Mahattatva (intellectual prominent power), sutratma ( subtle active prominent principle ), and Aham (egoism). The Supreme Spirit with manifold power appears in the forms of knowledge, action, matter, result, cause, effect, indeed higher than these. 11/3/37

तदेवमात्मन्यवरुद्धचित्तो
न वेद किंचिद्बहिरन्तरं वा । ११।९।१३।।

**TAD-EVAM-ATMANY-AVARUDDHA-CHITTO**
**NA-VEDA KINCHID-VAHIRANTARAM VA**

The mind, engrossed in the self, knows nothing either interior or exterior. 11/9/13 1/2

परावराणां परम आस्ते कैवल्यसंज्ञितः ।
केवलानुभवानन्दसन्दोहो निरुपाधिकः ।। ११।९।१८

PARAVARANAM PARAMA ASTE KAIVALYA SANJNITAH
KEVALANUBHAVANANDA-SANDOHO NIRUPADHIKAH

That supreme Lord, superior to cause and effect, remains as absolute unity, pure self - consciousness - bliss, without ignorance. 11/9/18

विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् । ११।१०।८।।

VILAKSHANAH STHOOLA-SOOKSHMAD-DEHAD-ATMEKSHITA SVADRIK

Being different from gross and subtle bodies, Atma (Self ) remains seer and self-knowledge. 11/10/8 1/2

यदेतदात्मनि जगन्मनोवाक्प्राणसंहतम् ।
सर्वं मायेति तर्केण स्वस्थस्त्यक्त्वा न तत्स्मरेत्।। ११।१८।२७

YAD-ETAD-ATMANI JAGAN-MANO-VAK-PRANA-SAMHATAM
SARVAM MAYETI TARKENA SVASTHAS-TYAKTVA NA TAT-SMARET

Cognising all this world, to be the combination of mind, speech and vital breath as illusion in Self, leaving these, and being self-abiding, do not remember these again. 11/18/27

तस्मात्सर्वात्मना तात निगृहाण मनो धिया ।
मय्यावेशितया युक्त एतावान्योगसंग्रहः ।। ११।२३।६१

**TASMAT-SARVATMANA TATA NIGRIHANA MANO DHIYA**
**MAYY-AVESHITAYA YUKTA ETAVAN-YOGA-SANGRAHAH**

Oh pupil (Uddhava) ! Therefore, control the mind completely by Buddhi (discriminating intellect) concentrated in me (the Supreme Being). This is the epitome of contemplation. 11/23/61

आसीज्ज्ञानमथो अर्थ एकमेवाविकल्पितम् ।
यदा विवेकनिपुणा आदौ कृतयुगेऽयुगे ।। ११।२४।२

**ASIJ-JNANAM-ATHO ARTHA EKAM EVAVIKALPITAM**
**YADA VIVEKANIPUNA ADAU KRITA-YUGE-YUGE**

Before the origin of time and in the first age (the golden age or the age of truth and purity) even when the persons became skilled in discrimination there was only one entity of knowledge and matter, without any difference, the ultimate Reality. 11/24/2

तन्मायाफलरूपेण केवलं निर्विकल्पितम् ।
वाङ्मनोऽगोचरं सत्यं द्विधा समभवद्बृहत् ।। ११।२४।३

**TAN-MAYA-PHALA-ROOPENA KEVALAM NIR-VIKALPITAM**
**VANG-MANO-GOCHARAM SATYAM DVIDHA SAMA-BHAVAD-BRIHAT**

That pure absolute great truth, beyond reach of speech and mind, procreated into two,in forms of illusion and reflection. 11/24/3

तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका ।
ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते ।। ११।२४।४

**TAYOREKATARO HY-ARTHAH PRAKRITIH SOBHAYATMIKA**
**JNANAM TVANYATAMO BHAVAH PURUSHAH SO-BHIDHEEYATE**

Of these two, one is matter Prakriti (active Principle), that is, cause and effect both. Another existence is knowledge, that is called the Purusha (Supreme Being). 11/24/4

सर्गः प्रवर्तते तावत्पौर्वापर्येण नित्यशः ।
महान्गुणविसर्गार्थः स्थित्यन्तो यावदीक्षणम् ।। ११।२४।२०

**SARGAH PRAVARTATE TAVAT- PAURVAPARYENA NITYASHAH**
**MAHAN-GUNA-VISARGARTHAH STHITY-ANTO YAVAD-EEKSHANAM**

Creation proceeds continually in the form of cause and effect ( for the individual soul) spreading forth great property, existing and ending so long as the reflecting power of the Supreme Lord is in action. 11/24/20

आत्मा केवल आत्मस्थो विकल्पापायलक्षणः । ११।२४।२७।।

**ATMA KEVALA ATMASTHO VIKALPAPAYA-LAKSHANAH**

Pure self is self-abiding, characteristic of dissolution of ignorance.

11/24/27 1/2

